टी० या०नी कृते ०नान्वेति व्यभिचारादिति। अन्वयव्यति०रेकव्यभिचारज्ञानरूपप्रतिबंधक
१ सत्वान्नियतान्वयव्यतिरेकसहचारनिश्चयरूपकारणासंभवेन न कारणत्व
निश्चय इत्यभिसंधिः। समाप्त्यभावदृति। अनेनान्वयभिचार इत्यनेनान्वयः
। विघ्नान्यूनसंख्याकस्य बलवत्तरस्यैव मंगलस्याविघ्ननिरसनद्वारा समाप्ति
साधनत्वेन तादृशमंगलाभावान्नान्वयव्यभिचार इति भावः। बहिरेवेति।
जन्मांतर एवेत्यर्थः। अतः कुतश्चिद्ग्रंथकर्तुर्नास्तिकत्वेपि नसमाप्तिः अ
न इति। तादृशमंगलस्य विघ्नध्वंसद्वारासत्वान्न व्यतिरेकव्यभिचार इत्य १
र्थः। एवं च कारणत्वं सिध्यतीति भावः। परंतु अतः उक्तहेतुद्वयान्न व्यभि
चारो नान्वयव्यतिरेकव्यभिचार इत्याहुः। मणिकृतस्तु मंगलस्य विघ्न

श्रीसद्गुरुचरणारविंदाभ्यांनमः॥ वंदे गुरुं शिवंसांबं दक्षिणामूर्त्तिमव्ययम्।
यद्दर्शनेनमंदोपिविंदेद्गुरुसमाननतां॥१॥ प्रारीप्सितग्रंथस्यनिर्विघ्नपरिस
माप्तयेसमाचरितंमंगलमीश्वरनत्यात्मकं शिष्याशिक्षायैनिबध्नन्चि
कीर्षितंप्रतिजानीते। विश्वेश्वरमिति। गिरांगुरुंनिखिलविद्यानामुपदे
ष्टारं इदमपीश्वरेविशेषणं- गिरंगुरुमितिपाठेतुसरस्वतींविद्यागुरुंचप्रणि
पत्येत्यर्थोबोध्यः॥ स्वग्रंथस्येतरग्रंथेनागतार्थतांदर्शयति। शिशुहितामि
ति। तर्कसंग्रहदीपिकांतर्कसंग्रहार्थप्रकाशिकां। आचरितस्यमंगस्य
नंनिबंधनस्यचफलंदर्शयति। चिकीर्षितस्येत्यादिना- ननुसमाप्तिंप्र
तिमंगलस्यकारणतास्यात्तदातदाचरणंयुज्यतेसैवनसंभवतीत्याशं

दी॰व्या॰नी॰पिनष्टीति ॥ अन्येतु स्वबोधितकर्त्तव्यताकत्वसंबंधेन श्रुतेरेव साध्यताग्रिम
ग्रंथस्यात्रैव तात्पर्यं । एवं च श्रुतेरनुमितत्वोपपत्तेरित्याहुः ॥ अलौकिकेति ॥ वि
२ धिमंतरा रागाद्द्वेषाद्वा भिन्नेत्यर्थः ॥ अविगीतेति । धर्मशास्त्राविरुद्धेत्यर्थः ।
शिष्टेति । वेदोक्तत्वज्ञानेन वेदविहितकर्मकारीत्यर्थः ॥ वेदोक्ताहिंसाकर्त्तरि
बौद्धेतिव्याप्तिवारणाय तृतीयांतं - आचारविषयत्वादिति - आचारः कृतिः ।
तस्याः कृत्यनियामकविषयतासंबंधेन हेतुताविवादग्रस्तेति तद्विषयत्वस्य
हेतुत्वानुधावनं - यथाक्रमं हेतुविशेषणप्रयोजनमाह । भोजनादावित्या २
दिना - अलौकिकाऽविगीताचारविषयत्वस्यैव हेतुतास्तु अशिष्टाचारवि
षयताद्दशहेतोरसत्त्वेन व्यभिचारासंभवादित्याशंकामिष्टापत्त्यापरिहरंति ।

ध्वंसएवफलंसमाप्तिस्तुस्वसामग्रीवशादेवेत्याहुः।एतत्तत्वमस्मदीयचिं
तामणिव्याख्यायामनुसंधेयम्।मंगलस्यश्रुतिबोधितकर्त्तव्यताकत्वंव्यव
स्थापयितुंशंकते।नन्विति-अनुतश्रुतेरेवेति।अत्रायमाशयः।श्रुतेर्वेदबो
धितकर्त्तव्यताकत्वरूपवक्ष्यमाणविधेयकोटिप्रविष्टत्वेपितदंतर्भावेण
विधेयत्वमभ्युपगम्यतेतच्छ्रुतेरनुमितेः पूर्वमसिद्धत्वात्।एतेनवन्ह्यादि
साध्यकानुमितिविषयतामादायवन्हित्वादिकमनुमितमितिव्यवहा
राभावेनश्रुतावनुमितत्वव्यवहारः कथमितिशंकानिरस्ता।श्रुतौविधे
यत्वाभ्युपगमेनतादृशव्यवहारेबाधकाभावात्-एवकारोव्यर्थकः।ते
नमंगलंकर्त्तव्यंसमाप्तिफलकत्वादित्यनुमानरूपप्रमाणांतरसत्वे

दी॰ व्या॰ नी॰ मूले सप्तपदार्था इति॰ द्रव्यत्वादिरूपा ये सप्तोपाधयस्तदन्यतमवंतः पदार्था इत्यर्थः।
तत्र सप्तत्वमपेक्षाबुद्धिविशेषविषयत्वं॰ एवमग्रिमग्रंथस्यापि पर्यवसानमवसेयं।
३ ननु सामान्यधर्मज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वात्सामान्यलक्षणकथनानं
तरमेव विभागो युक्तः। मूले कथमादौ विभाग इति न्यूनतां परिहरति। पदस्येति।
पदस्यार्थोऽभिधेय इति व्युत्पत्त्या पदसंबंध्यभिधाविषयत्वस्य लाभेऽपि पदसंबंधि
त्वांशस्याव्यावर्तकत्वादाह। अभिधेयत्वमिति॰ लक्षणं लक्ष्यत इति शेषस्तथा च
न न्यूनतेति भावः। विभागाद्वेति। पदार्थत्वावांतरधर्मपुरस्कारेण धर्मिप्रति
पादनाद्वेत्यर्थः। अधिकसंख्याव्यवच्छेदार्थकत्वादिति। तादृशसंख्यानिषेधसि २
द्धिफलकत्वादित्यर्थः। उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदके विधेयव्याप्यत्व

शिष्टपदमिति। जलताडनादावशिष्टाचारविषयत्वेनादृष्टहेतोरसत्वं स्फुटयति। नकुर्यादि
ति। स्वर्गादिफले व्यभिचारवारणाय। आचारविषयत्वेति - विधेयताख्याचारविषयत्वा
र्थकमितिसंक्षेपः। तर्कपदस्यारोपार्थकत्वभ्रमं वारयितुं इत्यादिना धारणतर्कत्वं नि
र्वक्ति। तर्क्यंत इति। उपादानरूपसंग्रहस्यासंभवादाह। संक्षेपेणेति। स्वरूपकथ
नं। स्वरूपज्ञानानुकूलशब्दः। एतावता द्रव्यादिपदार्था विषयाः। पदार्थतत्वाव
धारणं प्रयोजनं। संबंधश्च प्रतिपाद्यप्रतिपादकभावः। पदार्थतत्वावधारणकामो
धिकारीत्यनुबंधचतुष्टयं प्रेक्षावत्प्रवृत्त्यंगं सूचितं। षष्ठीतत्पुरुषभ्रमवार
णायाह। सुखेनेति। सुखबोधरूपप्रयोजनस्यान्यतःसिद्धत्वेनैतद्ग्रंथकरणप्र
योजनाकांक्षा न शाम्यतीत्याशयेनावतारयति। नन्विति। तेषां भाष्यादिग्रंथानां

दी॰ न्या॰ नी॰ सत्वेपिनक्षतिरिति ध्येयं। एवमग्रेपीति। एवंरीत्यादा। व्याणीत्यादावपीत्यर्थः।
द्रव्यमिति। जात्येकवचनम्। मीमांसकमतंदूषयितुमुपन्यस्यति। नन्वित्यादि
४ ना - प्रतीतिबलात्प्रत्याक्षिकप्रतीतिबलात्। तस्यद्रव्यत्वेनुमानंप्रमाणय
ति। नीलरूपाधारतयेति समवायेननीलरूपवत्तयेत्यर्थः। तेनकालिकसं
बंधेनतस्यातिप्रसक्तत्वेपिनक्षतिः। एवमग्रेपिबोध्यम्। तत्रद्रव्यत्वेसिद्धे
सत्यतिरिक्तत्वंव्यवस्थापयितुंक्लृप्तद्रव्येष्वंतर्भावंनिराचष्टे। तमसइ ४
त्यादिना। अतएवरूपवत्त्वादेव-नवायाविति। अंतर्भावइत्यनुषज्यते। संबं
धेभे। दाभिप्रायेणाह। स्पर्शाभावादिति। इदंध्वंसप्रागभावाधिकरणेत्यंताभा

भानमौत्सर्गिकमित्याशयेनाह। पदार्थत्वमिति। व्यवच्छेदार्थकत्वादिति।
एतद्रूपायो व्यवच्छेदो निर्णयस्तदर्थकत्वादित्यर्थः। सप्तभिन्नभिन्नत्वमिति।
द्रव्यादयो ये सप्तपदार्थास्तद्भेदकूटविशिष्टभिन्नत्वं वक्तव्यमित्यर्थः। द्रव्या
दिभेदसप्तकाभाववत्वमिति। द्रव्यादिभेदानां प्रत्येकं प्रसिद्धानां सप्तानां
कुत्राप्यसत्वेन नादृशभेदसप्तकत्वावच्छिन्नाभावस्य सर्वत्र सत्वान्न दोष
इति भावः। वस्तुतस्तु पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमित्यस्य पदा
र्थत्वं द्रव्यत्वादिसप्तोपाध्यन्यतमवत्वव्याप्यमित्यर्थः। तेन बहुषु पुस्तकेषु सप्ता
न्यत्वमत्वाप्रसिद्धिशंकानत्समाधानपरस्य न तु सप्तान्यतमत्वमित्यादिग्रंथस्या

Shankara

तीं॰व्या॰नी॰घटादौव्यभिचारवारणायालोकासहकृतेनेति।चक्षुर्ग्राह्यत्वंचक्षुर्जन्यलौकिक
प्रत्यक्षविषयत्वम्।तेनतमसश्चाक्षुषत्वेनतमोवान्धघटइतिघटादीनामुपनयेन(म)यो
५ दयाभानेपिनक्षतिः।विशेषाभावंदृष्टान्तयत्यालोकाभाववदिति।आलोकं
विनारूपवत्त्वेनतमोविषयकचाक्षुषप्रमोदयादाह।प्रमायामिति।कार
णत्वादिति।अन्यथान्धकारस्थघटादेश्चाक्षुषत्वापत्तेरितिदिक्।ननुतमसो
ऽभावरूपत्वेनभसिरूपवत्ताप्रतीतिःकर्मवत्ताप्रतीतिश्चकथंअभावेरूप
कर्मणोरभावादित्यतआह।नचेति।नभसोतिरिक्तत्वेनानावयवत्त्वागमा ५
वादिकल्पनागौरवमतस्तमआवश्यकत्वेतेजोभावरूपत्वंसिध्यतीतिबोध्यम्।त्यपि

वोनांगी। क्रियतइति। प्राचीनमताभिप्रायेण। अन्यथासमवायावच्छिन्नस्पर्श
सामान्याभावस्य दैशिकविशेषणतयोत्पत्तिकालावच्छेदेन वायावपिसत्वा
द्व्यभिचारित्वापत्तेः। वस्तुतस्तुनिरवच्छिन्नदैशिकविशेषणतयातस्य
हेतुत्वमितिध्येयम्। विषमहेतुमभिधायसमव्याप्तंतमाह। सदागतीति।
सदागतिर्विजातीयक्रियाउपसंहरति। तस्मादिति। कृष्णद्रव्यत्वनंतर्भावा
दित्यर्थः। तेजोभावरूपत्वादिति। प्रौढप्रकाशकतेजःसामान्याभावरूप
त्वांगीकारादित्यर्थः। अनस्तमोवत्यपि दैशेतेजः परमाण्वादिसत्वेनतेजः
सामान्याभावाभावेपिनक्षतिः। त्र्यणुकादिवारणायप्रौढेतिदिक्॥

दी॰व्यां॰नी॰ शात्वृत्तित्वमिति। लक्षणतावच्छेदकत्वाभिमतसंबंधेन किंचिल्लक्ष्यावृत्ति
त्वमित्यर्थः। लक्ष्यमात्रेति। मात्रपदं कृत्स्नार्थकम्। संबंधविशेषावच्छिन्नल
६ क्ष्यवृत्तित्वसामान्याभावस्फोरकम्। एकशफत्वमिति। न चात्रालक्ष्यवृत्ति
त्वरूपातिव्याप्तेरपि सत्वात्संकरः इति वाच्यम्। दुष्टसंकरेऽपि दोषासंक
र इति न्यायात्। एतद्दूषणत्रयरहित इति उक्तदूषणाभावत्रयविशिष्ट इ
त्यर्थः। नन्वसाधारणधर्मो लक्षणमिति सिद्धांतः। तस्मात्कारणात्कथं दूष ६
णत्रयरहितो धर्मो लक्षणमित्यत आह। स एवेति। उच्यत इति। अपि
युक्तैरिति शेषः। ननु साधारण्यस्य लक्ष्यालक्ष्यवृत्तितया तदभावरूपा

मुक्तिसाधनीभूतपदार्थतत्त्वज्ञानं लक्षणं विना नोपपद्यत इत्यत आह। द्रव्यत्वेति। संयोगजनकतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति भावः। ननु लक्षणलक्ष्यतावच्छेदकयोरभेद इत्यत आह। गुणत्वमिति। द्रव्यसामान्यलक्षणमिति। एवं च सामान्यधर्मकथनेन न न्यूनतेति भावः। दूषणत्रयरहितधर्मस्यैव लक्षणस्य वक्ष्यमाणतया तज्ज्ञानं विशेषणीभूतदूषणत्रयरहितत्वज्ञानं विना न संभवति। दूषणत्रयरहितत्वज्ञानं तु विशिष्टदूषणत्रयज्ञानाधीनं अभावबुद्धिं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य तंत्रत्वादित्याशयेन दूषणत्रयं दर्शयति। लक्ष्यैकदे

दी॰ यान्नी व्याप्तौव्यभिचारः। इतरयोश्चभागासिद्धिस्वरूपासिद्धी इति। लक्ष्यता
वच्छेदकसमनियतलक्ष्यलक्षणलक्षणत्वेलक्षणस्यव्यावृत्तिरेवप्रयोज
८ नमितिमतेव्यावर्तकस्येलक्षणलक्षणलक्ष्यतयाव्यावृत्त्यादावतिव्या
प्तिरित्याशंकांतन्मतानुसारेणनिराकरोति। व्यावर्तकस्यैवेति। इतर
भेदानुजनकस्येत्यर्थः। इतरभेदविधेयकानुमितिजनकतावच्छेद
कविषयताविशेषाश्रयस्येतियावत्। एतेनव्यावहारिकव्यवच्छेदः। ८
लक्षणत्वेगवादिलक्षणत्वेमुक्त लक्षणलक्षणलक्ष्यत्वइतियावत्।
लक्ष्यत्वइतिपाठेत्वयमेवार्थोबोध्यः। व्यावृत्ताविति। गवादीनरभेदे

साधारण्यस्याव्याप्त्यादिदोषग्रस्त धर्मेपिसत्त्वात्कथंदोषत्रयरहितए
वासाधारणइत्याशंकांपरिजिहीर्षुरसाधारणत्वमन्यादृशंनिर्वक्ति।
लक्ष्यतावच्छेदकसमनियतत्वमिति।लक्ष्यतावच्छेदकव्यापकत्वेसति
लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थः।अव्याप्त्यसंभवग्रस्तयोर्वारणाय
सत्यंतं अतिव्याप्तस्यवारणायविशेष्यम्।धर्मपदंलक्षणताघटकसं
बंधेनव्यापकत्वादितात्पर्यग्राहकमितिभावः।अत्रेदंबोध्यमेतद्दोषा
असाधारणत्वस्यविघटकाः अतिव्याप्तौव्याप्यत्वस्येतरयोश्चव्याप
कत्वस्यचभंगात्।एतेषांदूषकताबीजंलक्षणेनेतरभेदसाधनेति

दी॰ व्या॰ ननु किमिदं नाम लक्षणलक्षणलक्ष्यतावच्छेदकं व्यावर्त्तकत्वम् । न ताव नी॰
त्सामान्यतोभेदानुमापकत्वं व्यावृत्त्यभिधेयत्वादेरपि यत्किंचिदुभयत्वावच्छि
८ न्नप्रतियोगिताकभेदानुमापकतया तत्रातिव्याप्तिकथनासंगतेः सर्वेषाम
पि व्यतिरेकिधर्माणां यत्किंचिद्व्यावर्त्तकतयाऽसाधारण्यादिघटकव्या
पकत्वादिवैयर्थ्यापाताच्च । नापि विशिष्य तत्तद्धर्मावच्छिन्नेतरभेदानुमा
पकत्वं तथा सति गोत्वावच्छिन्नेतरभेदानुमापकस्य सास्नादिमत्त्वस्य
गोत्वसमनियतत्वं लक्षणमित्येवं रीत्या विशिष्य तत्तल्लक्षणस्य वक्तव्य ८
तया गोत्वादिरूपलक्ष्यतावच्छेदकसमनियतत्वस्य गोत्वावच्छिन्नेतर

गोत्वादिरूपलक्ष्यतावच्छेदकसमनियतत्वस्य अभिधेयत्वप्रमेयत्वादौ पदा
र्थत्वसमनियतत्वस्यचसत्त्वेनातिव्याप्तिवारणायव्यावृत्तिभिन्नत्वमभिधे
यभिन्नत्वादिभिन्नत्वंचलक्षणेनिवेशनीयमित्यर्थः।यद्यपिव्याप्तेरपिव्या
वहारिकत्वस्यवक्ष्यमाणतयातेनैवरूपेणव्यावहारिकत्वेनसंग्रहसंभवात्पृ
थगभिधानमनुचितंतथापिहेतुसाध्ययोरैक्येहेतुमत्तानिश्चयकालेसाध्य
संशयरूपपक्षताया असत्त्वेननानुमितिरितिप्राचीनमतेइतरभेदस्यव्या
वर्त्तकत्वाभावेनतत्रातिव्याप्तिः सिषाधयिषाविरहविशिष्टसिध्यभावः
पक्षतेतिसिद्धांतिमतेतुव्यावृत्तेरपिव्यावर्त्तकत्वेनलक्ष्यतयानतत्रलक्षण
संगमनस्येष्टत्वेननातिव्याप्तिरित्यावेदयितुंपृथक्कथनमितिध्येयम्।६-

दी॰व्या॰ व्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वंच तादृशलक्षणे निवेशनीयमि नी॰
त्यभिप्रायकोयंग्रंथइतिनपूर्वोक्तदोषावसरः। अधिकविचारस्त्वन्यत्रा
९ नुसंधेयः। ननुलक्षणस्यव्यवहारोपिप्रयोजनंम्‌ अनेनरूपेणव्यवहर्त्त
व्यज्ञानंविनातद्रूपावच्छिन्नबोधकशब्दरूपव्यवहारासंभवात्‌ एवंच
व्यावहारिकलक्षणस्यापिलक्ष्यत्वात्तद्भिन्नत्वंनदेयमित्याह। व्यवहा
रस्यापीति। ननुव्यावृत्तावतिव्याप्तिवारणायतद्भिन्नत्वमावश्यकंम्‌
व्यावृत्तेर्व्यावहारिकत्वाभावादितिभ्रमंवारयति। व्यावृत्तेरपीति। अ ९
पिनाभिधेयत्वादिपरिग्रहः दृष्टांतलाभाय। नन्वाद्यलक्षणावच्छिन्न

भेदादिरूपव्याप्त्नावतिव्याप्तेः स्संभवेप्यभिधेयत्वादावतिव्याप्त्यलग्न
कनापत्तेर्गोत्वादिसमनियतत्वस्यतत्रासत्वादितिचेन्नैवं। सास्नादिम
त्वंपक्षीकृत्यगोत्वावच्छिन्नेतरभेदानुमापकत्वेसाध्यविशेषव्याप्तावन्व
यदृष्टांतालाभेनयद्यद्धर्मसमनियतंतत्तदवच्छिन्नव्यावर्तकमितिरीत्या
सामान्यमुखेनव्याप्तेरभ्युपगंतव्यतयातत्रासिद्धसाधनाप्रसिद्धिभ्याम
व्यावर्तकयोर्व्याप्त्याभिधेयत्वयोस्तत्तद्धर्मसमनैयत्यरूपप्रकृतहेतो
स्तत्तुल्यस्यवाहेतोः स्सत्वेनप्रकृतसाध्यस्यतत्तुल्यस्यवासाध्यस्यास
त्वेनव्यभिचारस्स्यादतस्तद्दोषवारणायतत्तद्धर्मावच्छिन्नेतरभेदरूप

दी०व्या० तद्वत्त्वमादायनातिव्याप्तिरितिभावः।एवमपीति।उक्तविवक्षयाव्या नी०
प्तिवारणेपि-एकार्थसमवायाद्वेति।एकस्मिंनर्थेसमवायेनसत्त्वा
१० देवेत्यर्थः।गुणानंगीकारादिति।क्लृप्तेन-समवायघटितसामानाधि
करंण्येनैवगुणवत्ताव्यवहारोपपत्तौतत्राक्लृप्तगुणत्वकल्पनंनसं
भवति।गौरवादितिभावः।सामान्यवानिति।समवायेनसामान्यवत्वं
बोध्यंम्।तेनकालिकादिसंबंधेनतद्वति ध्वंसेनातिव्याप्तिः।गुणइतिलक्ष्य १०
निर्देशः।लाघवादाह-गुणत्वजातिमान्वेति।यद्यपिलक्षणलक्ष्यताव
च्छेदकयोरभेदस्तथापिलक्षणेनेतरभेदसाध्यहेतौसाध्यसामानाधि

द्रव्ये गुणवत्त्वस्यासत्वेऽपि कालांतरावच्छिन्नेन तत्र तत्सत्वमक्षतमेवं च गुणत्वाश्र
यत्वलक्षणं साधित्यत आह। उत्पन्नविनष्टेति - यादृशद्रव्यारंभकसंयोग न
जनकक्रियोत्पत्तितृतीयक्षणे अवयवांतरे तादृशसंयोगनाशिका क्रिया जा
ता - तादृशद्रव्य इत्यर्थः। नवीनाः पुनरसमवायिकारणस्य कार्यसहभावे
न कारणतामवलंब्योत्पन्नविनष्टत्वं नांगीकुर्वंति। गुणादावतिव्याप्तिवारणा
य गुणसमानाधिकरणेति जातिविशेषणं। सत्तामादायातिव्याप्तिवारणा
य सत्ताभिन्नेति। द्रव्यगुणान्यतरत्वमादायातिव्याप्तिवारणाय जातीति
समवायेन तादृशधर्मवत्त्वतात्पर्यग्राहकं अतः कालिकादिसंबंधेन

टी॰व्या॰ व्यक्तेस्तुल्यत्वमन्यूनानतिरिक्तव्यक्तिकत्वं-घटत्वकलशत्वाद्योर्भिन्न नी॰
जातित्वे। संकरः परस्परात्यंताभावसमानाधिकरणयोर्धर्मयोरेकत्र
११ समावेशः। भूतत्वमूर्त्तत्वादेर्ज्जातित्वे- अनवस्थितिरनवस्था जाते
र्ज्जातिमत्वे। रूपहानिस्वतो व्यावर्त्तकत्वात्मकरूपहानिर्विशेषस्य
जातिमत्वे। असंबंधो समवेतत्वमभावादेर्ज्जातिमत्व इति संक्षेपः।
लघुत्वादीनां प्रामाणिकत्वेपि क्लृप्तेष्वंतर्भावो न्याय्य इति समाधत्ते। ल ११
घुत्वस्येति। संयोगासमवायिकारणे संयोगेति। व्याप्तिवारणाय संयो
गभिन्नत्वे सतीति- संयोगसमवायिकारणद्रव्येति व्याप्तिवारणाया

करंण्यनिश्चयेपि हेतुधर्मितावच्छेदक साध्यनिश्चयस्यानियतत्वाभिप्रा
येणेदंलक्षणमिति संक्षेपः। एवमग्रेपि बोध्यम्। गुणत्वजातिसिद्धिस्तु गुण
पदशक्यतावच्छेदकतयेति गुणदीधितौ भट्टाचार्याः। नचैवं विभुपदशक्य
तावच्छेदकतया विभुत्वजातिसिद्ध्यादिति वाच्यम्। भूतत्वसंकरस्य बाध
कस्य सत्वेन तस्य जातित्वासंभवात्। जातित्वेनाभिमतसंकरस्यैव जा
तित्वबाधकत्वात्। तथाचोक्तं द्रव्यकिरणावल्यामुदयनाचार्यैः। व्यक्तेर
भेदस्तुल्यत्वं संकरोथानवस्थितिः। रूपहानिरसंबंधो जातिबाधकसंग्र
ह इति। व्यक्तेरभेद स्वाश्रयव्यक्त्यैक्यम् आकाशत्वादेर्जातित्वबाधकम्।

दी॰व्या॰ प्रती॰तेरभावादितिदिक्। पृथिवीलक्षणस्यप्राथम्यबीजमाह- तत्रेति। नी॰
पृथिव्यादिमध्यइत्यर्थः।गंधसमवायिकारणतावच्छेदकतया।पृथिवी
१२ त्वजातिसिद्धिरितिबोध्यम्।नाम्नेति।तृतीयार्थोऽभेदस्संकीर्त्तनंप्रति
पादकशब्दस्तेनेति।तथाचवस्तुप्रतिपादकनाममात्रमुद्देशइतिलक्षणं
पर्यवस्यति।अत्रघटइतिपदे तिव्याप्तिवारणायवस्तुपदंलक्षणीयवस्तु
परम्।लक्षणीयस्यपृथिव्यादेस्सामान्यतःप्रतिपादकप्रमेयपदे तिव्या १२
प्तिवारणायनामपदंलक्ष्यतावच्छेदकावच्छिंन्नपरम्।लक्षणवाक्येनाम
सत्वादतिव्याप्तिवारणाय-मात्रपदमितिध्येयम्।आरब्धेजंन्ये-परस्पर

समवायीति।भ्रमणादीनामित्यादिनारेचनस्पंदनोर्ध्वज्वलनतिर्यग्गमनानां
संग्रहः।गमनेंतर्भावादिति।नचोत्क्षेपणादीनामपिगमनेंतर्भावोस्त्वितिशं
क्यंस्वतंत्रेच्छस्यनियोगपर्यनुयोगानर्हस्यमुनेःस्वसंमतत्वादितिभावः।पर
मित्यादि।सामान्यलक्षणंतुमूलकृतैववक्ष्यतइति।न्यूनेनेतिध्येयम्।
सत्तायाःद्रव्यत्वापेक्षयाऽधिदेशवृत्तित्वेनपरत्वमेवघटत्वादीनांन्यूनदेश
वृत्तित्वेनापरत्वमेवद्रव्यत्वादीनांसत्तातोऽपरत्वंघटत्वादितःपरत्वमितिवि
वेकः।समवायस्यभेदोनास्तीति।नचसमवायस्याभेदेस्पर्शसमवायवति
वायौरूपवत्ताप्रतीतिस्यादितिशंक्यंरूपसमवायसत्त्वेपिरूपाभावेननतथा।

दी॰ व्या॰ क्षणताघटकसंबंधान्निवेश्य कालादावतिव्याप्तिं वारयति। सर्वाधारेति। वस्तु नी॰
तस्तु समवायादीनां समवायत्वादिनैव संसर्गतया तेनैव रूपेण तत्तत्संबंधस्य
१२ तत्तल्लक्षणघटकत्वं बोध्यम्। नित्यपृथिवीत्वादिरूपलक्षणगतं नित्यत्वादि
कं दर्शयति। नित्यत्वमिति। प्रकारांतरेणेति। पृथिवीमित्यनुषज्यते। अत्रानि
त्यपृथिव्याः शरीरेंद्रियभिन्नत्वरूपविषयलक्षणाक्रांतत्वेन विषयांतर्गतत्व
मिति पृथिव्यास्त्रिविधत्वमत एव मूले पुनस्त्रिविधेत्युक्तिः संगच्छत इति ध्येयं।
केचित्तु नित्यपृथिव्या एवं त्रैविध्यं दर्शयंति। उद्देशक्रमानुसारेण प्रथमं शरीरल १२
क्षणमाह। आत्मन इति। आयतनमवच्छेदकं। तथा च मिलितं यादृशं लक्ष
णं

विरोधेनेति। सुरभिगंधप्रत्यसुरभिगंधस्यासुरभिगंधप्रतिसुरभिगंधस्य प्रतिबंधकत्वेनेत्यर्थः। प्रतीत्यनुपपत्तिरिति। अतश्चित्रगंधएवा। प्रतिबध्य स्वीकार्यइतिभावः। अवयवगंधस्येति। स्वाश्रयसमवेतत्वसंबंधेनेत्यर्थः। तुष्यतुदुर्जनइतिन्यायेनांगीकृत्याह। किंचेति। जलत्वादिकमादायाति व्याप्तिवारणायगंधसमानाधिकरणेति। सत्तावारणायद्रव्यत्वापरेति। द्रव्यत्वन्यूनवृत्त्यर्थकंम्। तेनद्रव्यत्वव्युदासः। गंधप्रतीतिरिति। सुरभिज लमित्यादिप्रतीतिरित्यर्थः। पृथिवीगंधस्येति। स्वाश्रयसंयुक्तत्वसंबंधेने त्यर्थः। तत्रजलादौ–यथाश्रुतग्राहीशंकते। नन्विति। अनुगतरूपेणत्व

टी॰व्या॰ द्भूतत्वज्ञानात्तदभाववद्घटवत्समुद्भूतत्वंतच्चसंयोगादावपितथाचशब्देतरोद्भूतगु नी॰
णसंयोगमादायासंभववारणायविशेषेति।कालादावतिव्याप्तिवारणायवि
१४ शेष्यदलं।तत्रैवातिव्याप्तिवारणायज्ञानकारणेति।प्राचीनमतेविषयेन्द्रिया
वयवस्यनवीनमतेकालादौरूपाभावप्रत्यक्षेसंयोगस्यप्रत्यक्षकारणतया
तदाश्रयस्येन्द्रियावयवस्यनवीनमतेकालादौरूपाभावप्रत्यक्षेसांनिकर्षघटक
तयाकारणीभूतचक्षुःसंयोगाश्रयस्यकालादेश्चवारणायमनःपदरि।नचा १४
त्मात्यत्वेसतीत्यनेनैवात्मनिव्यभिचारवारणसंभवेकिंगुरुतरशब्देतरोद्भूत
विशेषगुणेत्यादिविशेषणेनेतिवाच्यम्।तथासतिचर्ममनःसंयोगस्यज्ञान

संपन्नं तादृशमाह। यदवच्छिन्नेति। सुखदुःखसाक्षात्कारावच्छेदकमिति
यावत्। अत्रात्मावयवित्वसत्तेति विशेषणद्वयम्। तेन पादादीनामवच्छेदक
त्वेपि न तत्र नातिव्याप्तिः। शरीरत्वं न जातिः। पृथिवीत्वादिना संकरात्। त
थेन्द्रियत्वं न जातिरित्याशयेनाह। शब्देतरोद्भूतेति। आत्मादावतिव्याप्ति
वारणाय सत्यन्तं। श्रोत्रेऽव्याप्तिवारणाय शब्देतरेति। चक्षुरादौ विशेष
गुणस्यानुद्भूतरूपादेः सत्त्वेनाव्याप्तिवारणायोद्भूतेति। उद्भूतत्वं न जाति
श्शुक्लत्वादिना सांकर्यात्। न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यं।
चाक्षुषादावुद्भूतरूपत्वादिना कारणत्वानुपपत्तेः। किन्तु शुक्लत्वादिव्याप्यमनु

दी०व्या० क्तरीत्येत्यर्थः। एवमग्रेप्यूह्यम्। मूलेआबिंधनमिति। अद्भिरिंधनंदीपनंय नी०
स्येत्यर्थः। भुक्तस्योदनादेः परिणामः परिपाकस्तत्रहेतुरित्यर्थः। आकर
१५ जमिति। आकरः खनिस्तत्रजातमित्यर्थः। सुवर्णस्यतैजसत्वंव्यवस्थापयि
तुंशंकते। दीपिकायां। नन्विति। पार्थिवत्वसाधकंपीतत्वहेतुमुक्त्वातेजस्त्वा
भावसाधकंहेतुमाह। गुरुत्वादिति। एतेनसुवर्णस्यतैजसोविजातीयस्यापी
तरूपंस्वीक्रियतेपीतंसुवर्णमित्याद्यबाधितप्रतीतिबलादेवंचतैजसत्वस्यानि १५
र्बाधतयापृथिवीत्वंनसिध्यतीति। कस्यचिद्भ्रांतिर्निरस्ता। गुरुत्वस्याप्रत्यक्ष
त्वेऽनन्यथावक्तुमशक्यत्वादितिदिक्। सुवर्णस्यपीतिमगुरुत्वाश्रयत्वेनातिरि

ज्ञानमात्रं प्रतिहेतुत्वान्नातिव्याप्तेरित्यलं विस्तरेण। एवं चेति। तत्तदर्थस्य श
रीरादिसामान्यलक्षणत्वेनेत्यर्थः। ननु गंधवत्त्वनिवेशेनैव तत्तल्लक्षणसामं
जस्ये गंधग्राहकत्वनिवेशनमनुचितमेवं चेंद्रियं गंधग्राहकमिति मूलमनुचित
मित्याशंकां परिजिहीर्षुस्तन्मूलं तत्प्रयोजनकथनपुरःसरं तया व्याचष्टे। घ्रा
गंधग्राहकमिति। उत्तरत्रेंद्रियं रसग्राहकमित्यादौ- शीतस्पर्शसमानाधि
करणेति। तत्र विशेषणप्रयोजनम्। पूर्वोक्तरीत्यूह्यम्। जलत्वजातिसिद्धि
स्तु स्नेहजनकतावच्छेदकतयेति ध्येयम्। अन्यत्सर्वं पूर्वरीत्येति। नित्यत्वादिकं
जलशरीरादिलक्षणं च गंधवत्त्वस्थाने शीतस्पर्शवत्त्वं निवेश्य पृथिवीनिरूपण

टी॰ व्या॰ अत्यंतानलसंयोगेप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेसतिगुरुत्वाज्जल नी॰

मध्यस्थघृतादिवदित्यनुमानेनतत्सिद्धिर्द्रष्टव्या।जलादिकमादाया

१६ र्थांतरपर्यवसानंवारयति।नैमित्तिकेति।ननूष्णस्पर्शभास्वररूपयोरु

पलब्ध्यभावेनसुवर्णस्यतैजसत्वमनुपपन्नमित्यतआह।तस्येति।प्र

तिबंधादिति।दोषविधयेत्यादिः।शरीरेतीति।तथाचघ्राणस्यविषयं

तद्भावइतिभावः।स्थानभेदादिति।हृदिप्राणइत्यादिकोशोक्तस्थान १६

भेदादित्यर्थः।स्वमतंदर्शयति।स्पर्शानुमेयइति।अस्योपलभ्यमान

स्पर्शस्याश्रयःपृथिवीनचेत्यन्वयः।चतुष्टयमिति।इदमाकाशादिप्रत्येक

क्तत्वं व्यवस्थापयितुमनुमाने अप्रयोजकशंकावारणाय कार्यकारणभा

वमनुकूलतर्कं व्यवस्थापयति। अत्यंतानलेति सुवर्णस्येत्यादिः। अनु

मानप्रयोगस्त्वित्थमवसेयः। सुवर्णमपार्थिवमसति प्रतिबंधके अत्यं

तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं

यथा पृथिवी। जलमध्यस्थघृतादौ व्यभिचारवारणायासति प्रतिबं

धक इति। अग्निसंयोगासमानाधिकरणद्रवत्ववति घृतादौ व्यभिचा

रवारणायात्यंतानलसंयोगे सतीति द्रवद्रव्यांतरासिद्धावि ति। अत्यं

तानलसंयोगेऽपीति माश्रयः द्रवत्वनाशप्रतिबंधकद्रवद्रव्यांतरसंयु

क्तः।

दी०व्या० प्रत्यक्षत्वाऽनंगीकारे।अप्रत्यक्षत्वापत्तिरिति।उद्भूतरूपाभावादितिभावः।न नी०
नुपरमाणुपुंजस्यैवघटादिरूपत्वेनातिरिक्तावयविनोऽसत्त्वात्पृथिव्यादिचतुष्ट
१७ यस्यनित्यत्वाऽनित्यत्वाभ्यांविभागकथनमनुपपन्नमित्याशंकांवारयति।
इदानीमिति।पृथिव्यादिचतुष्टयनिरूपणानंतरमित्यर्थः।द्व्यणुकनाशइ
त्यस्यपरमाणुद्वयसंयोगनाशइत्यादिः।सर्वत्रेति।जन्यद्रव्यसामान्यइत्य
र्थः।एकरीतिरेवोचितेतिभावः।चाक्षुषद्रव्यत्वादिति।चाक्षुषत्वेसति
द्रव्यत्वादित्यर्थः।रूपादावात्मनिचव्यभिचारवारणायविशेष्यविशेष १७
णे।नन्विदमप्रयोजकमितिशंक्यंचाक्षुषंप्रतिकारणस्यमहत्त्वस्यतत्रावपे

भेदसाधनाभिप्रायेण। सर्वत्रोपलब्धिप्रसंगादितिस्पर्शस्येत्यादिः।
आकाशादीनांविभुत्वादितिभावः। प्रत्यक्षः बहिरिंद्रियजंन्यप्रत्यक्ष
विषयः। अनुद्भूतस्पर्शाश्रयेत्वगिंद्रिये व्यभिचार वारणाय प्रत्यक्षेति। उ
पाधित्वादिति। तथाचहेतावुपाधेर्व्यभिचारेणसाध्यव्यभिचारोन्नयन
संभवान्नप्रत्यक्षत्वासिद्धीरितिभावः। ननुनाद्दराप्रत्यक्षत्वस्यगुणा
दावपिसत्वेनतत्रोद्भूतरूपाभावेनसाध्य व्यापकत्वात्कथंनस्योपा
धित्वमित्यतआह। यत्रेति। तथाचपक्ष धर्मावच्छिंन्नसाध्यव्यापको
यमुपाधिरितिभावः। एवंप्रत्यक्षस्पर्शाश्रयस्याप्युद्भूतरूपाभावेन

टी॰व्या॰ परिच्छिन्नपरिमाणवत्त्वमिति। यद्दिपरिच्छिन्नत्वस्यापकर्षाश्रयत्वात्मकतया नी॰
परमाणोरणुतरत्वेन द्व्यणुकपरिमाणापेक्षया परमाणुपरिमाणस्याऽपकृष्ट
१८ त्वाभावात्। परमाणुष्वव्याप्तमिदं लक्षणमित्युच्यते। तदाह। क्रियावत्त्वमि
ति। वस्तुतस्तु। लाघवमेवान्तरकल्पानुसरणे बीजमिति ध्येयम्। अती
तादिव्यवहारहेतुः काल इति मूले आदिनाऽनागतादिपरिग्रहः। अ
तीतत्वं च वर्त्तमानध्वंसप्रतियोगित्वं। वर्त्तमानत्वमिह शब्दप्रयोगाधिकरणका १८
लवृत्तित्वम्। भावित्वं च वर्तमानप्रागभावप्रतियोगित्वं। अत्र सर्वत्र कालस्य
घटकतयाऽतीतादिव्यवहारहेतुत्वं तस्येति ध्येयं। न च तादृशव्यवहारस्य

क्षितत्वतयासावयवत्वंविनाऽवयवसंख्याजन्यस्यतस्यस्वीकर्तुमशक्यत्वादिति संक्षेपः। यत्किंचिज्जन्यध्वंसस्येदानीमपिसत्वात्सर्वेति। नित्यद्रव्याणांध्वं सासंभवात्कार्येति। परमाणुनिष्ठरूपादीनांतदानीमपिसत्वाद्द्रव्येति। ध्वं सानांध्वंसासंभवेनमहाप्रलयेपिसत्वाद्भावेतिदिक्। शब्दगुणकमित्यत्र शब्दवदितिवक्तव्येतथाकथनमाकाशेशब्दएवविशेषगुणइतिद्योतनाय। घटाकाशोमठाकाशइत्यादिव्यवहारस्योपाधिकृतत्वेनासाधकत्वादा काशस्यानेकत्वेप्रमाणंनेत्याह। भेदइति। एकत्वादिति। आकाशस्येत्या दिः। नन्वेकत्वेणाविभुत्वमास्त्वित्यतआह। सर्वत्रेति। सर्वादिगवच्छेदेनेत्यर्थः।

दी॰व्या॰ या॰नित्यज्ञानाधिकरणत्वमिति। नन्वनित्यं विज्ञानमानंदं ब्रह्मेति श्रुत्यावि नी
रोध इति वाच्यम्। आनंदपदस्यानंदवदर्थकतया इव विज्ञानपदस्यापि वि
१९ ज्ञानवदर्थकतास्वीकारेणाऽविरोधात्। न चानंदपदस्यैव तादृशार्थकत्वम
सिद्धमिति वाच्यम्। अर्शआद्यजंतत्वांगीकारेण तादृशार्थसिद्धेरन्यथा
नपुंसकत्वानुपपत्तेः। अत्रानंदो भारापगमे सुखी संवृत्तोहमितिव
दुःखाभावे उपचर्यंते। नवीनास्तु नित्यसुखमीश्वरस्यांगीकुर्वंति इत्यल १९
मधिकजल्पनेन। अरूपिद्रव्यत्वादिति। बाह्यप्रत्यक्षं प्रत्युद्भूतरूपस्य
हेतुत्वादिति भावः। प्रमाणत्वादिति। नं चेदमप्रयोजकमिति शंक्यं कार्य

येपरिस्पंदोपाधिमादायसंभवतीतिवाच्यम्।अनुगतस्यव्यवहारस्याऽनुग
तविषयंविनाऽसंभवेनातिरिक्तकालस्वीकारादितिदिक्।सर्वाधारइति।
कालिकसंबंधेनेत्यादिः।अत्रविभिन्नकालिकयोराधाराधेयभावविरहा
त्क्रियादेःसर्वाधारत्वशंकैवनावतरतीतिभावः।प्राच्यादिव्यवहारहेतु
रितिमूले आदिनाप्रतीच्यादिपरिग्रहः।उदयाचलसंनिहितमूर्त्तावच्छिं
नादिक्प्राची।अस्ताचलसंनिहितमूर्त्तावच्छिंनादिक्प्रतीची।मेरोःसं
निहितमूर्त्तावच्छिंनादिगुदीची।तद्व्यवहितमूर्त्तावच्छिंनातुदक्षिणा।मू
लेज्ञानाधिकरणमिति।समवायेनज्ञानवदित्यर्थः।तत्रद्वयोर्मध्ये-दीपिका